# गायत्रीपुरश्चरणविधि



खेमराज श्रीकृष्णदास प्रकाशन, बम्बई-४

श्रीगणेशाय नमः

अथ

# गायत्रीपुरश्चरणविधिः



भूयस्त्वक्षरगायत्रीं संयतात्मको जप्त्वा ॥ जुहुयात्पाय-सतिलघृतदूर्वाभिर्दुग्धचरुसमिद्भिश्च ॥ अस्यार्थः ॥ वटाश्वत्थोदुंबरार्कसमिद्भिश्चः ॥ एकैकं त्रिसहस्रं मंत्री स्वाभीष्ट-सिद्ध्येमुक्त्यै ॥ अक्षरसहस्रसंख्यंमुख्येतरैः केवलैर्जुहुयात् ॥ दुरितोच्छेदनविषयेदीर्घायुषेचविशदमतिः ॥ आयुष्कामो जुहुयात्पायसहविराज्यकेवलाज्यैश्च ॥ दूर्वाभिः सतिलाभिः सर्वैस्त्रिसहस्रकंमंत्री ॥ अथत्रिमधुसहितैरर्कपर्णैर्जुहुयात्सरोरु-हैरयुतम् ॥ नष्ट श्रीरपिभूयोभवतिमनोज्ञंमंदिरंलक्ष्म्याः । अन्ना-द्यर्थैतैरपिपालाशैर्ब्रह्मवर्चसेजुहुयात् ॥ सर्वैरेतैर्जुहुयात्सर्वफ-लवाप्त्यैद्विजेश्वरोमतिमानिति ॥ अक्षरसमसंख्यानिलक्षा-णियस्यांक्रियायांचतुर्विंशतिरितियावत् ॥ घृततिलात्मकह-विर्मुक्त्यैइत्यारभ्यचेत्यंतमेकंवाक्यम् ॥ विशदमतिः ध्यान जपाभ्यांशुद्धचरित्रइत्यर्थः ॥ हविराज्यात्मकमेकंहविः ॥

ओदनमन्नाद्यर्थमपीति भिन्नक्रमेपि ॥ पालाशैःपुष्पैः॥ व्याहृ-
तित्रयसंयुक्तांगायत्रींदीक्षितोजपेत् ॥ तत्त्वलक्षविधानेन भिक्षा-
शीविजितेंद्रियः ॥ क्षीरोदनतिलान्दूर्वाः क्षीरद्रुमसमिद्वरान् ॥
पृथक्सहस्रत्रितयंजुहुयान्मंत्रसिद्धये ॥ तत्त्वसंख्यासहस्राणि
मंत्रवज्जुहुयात्तिलैः ॥ सर्वपापविनिर्मुक्तोदीर्घमायुः सविंदति ।
आयुषेसाज्यहविषाकेवलेनाथसर्पिषा ॥ दूर्वाघृतैस्तिलैर्मंत्री
जुहुयाच्छ्रिसहस्रकम् । चरुणाज्यैस्त्रिमध्वाक्तैर्जुहुयादयुतंततः ॥
महालक्ष्मीर्भवेत्तस्यषण्मासान्नात्रसंशयः । ब्रह्मश्रियेचजुहुया-
त्प्रसूनैर्ब्रह्मवृक्षजैः ॥ ब्रह्मवृक्षःपलाशः॥ तत्रापिमध्वाक्तैरित्य-
नुषंगः ॥ अथप्रयोगः ॥ तत्रादौदेशकालौसंकीर्त्यकरिष्यमा-
णगायत्रीपुरश्चरणाधिकारसिद्ध्यर्थंसमस्तपापक्षयार्थंचषडब्द-
त्र्यब्दंवाअमुकप्रत्याम्नायेनअहमाचरिष्ये। इतिसंकल्प्य ततः अमुकश-
र्मणःकरिष्यमाणगायत्रीपुरश्चरणांगत्वेनश्रीगायत्रीमंत्रसिद्ध्यर्थं
पंचदशप्रणवव्याहृतिपूर्वकंगायत्र्ययुतजपंकृत्वाबृहद्गविधाने ॥
गायत्रीमंत्रसिद्ध्यर्थंगायत्रींत्र्ययुतंजपेत् ॥ सर्वेषांवेदमंत्राणां
सिद्ध्यर्थंलक्षकंजपेत् । गायत्रींन्याससहितांसप्तव्याहृतिसंपु-
टाम् ॥ त्र्ययुतंतुजपेत्पूर्वंगायत्रीसिद्धिदायतः ओंभूः ॥
ओंभुवः ॥ ओंस्वः ॥ ओंमहः ॥ ओंजनः ॥ ओंत-

पः ॥ ओंसत्यम् ॥ एवंत्र्ययुतंजपंकृत्वासूक्तानिपठेयुः॥ आ-
पोहिष्ठा० ॥ एतोन्विन्द्रेति ॥ ऋतंचसत्यं ऋक् ॥ स्वस्ति-
नोमिमीता० ॥ स्वादिष्ठयेत्याद्याः पवमानःसुवर्जनः० सर्वंश्च
जपेत् ॥ प्रत्येकंदशवारंजपित्वा ॥ तत्सवितुरित्यस्यचऋचः
ऋषिं विश्वामित्रंतर्पयामि ॥ गायत्रीछंदसस्तर्पयामि ॥ सवि-
तारंदेवंतर्पयामि ॥ इतितर्पयित्वा ॥ रुद्रं नमस्कृत्य कद्रुद्राये-
त्यादिचत्वारिसूक्तानिसकृज्जपेत् ॥ ततः ॥ सुमुहूर्तेदेशका-
लौसंकीर्त्य अमुकशर्मणः ममइहजन्मनिजन्मांतरेषुचमनो-
वाक्कायकर्मभिःकृतसमस्तपापक्षयार्थं पुत्रपौत्रधनधान्याभि
वृद्ध्यर्थंचतुर्विधपुरुषार्थसिद्ध्यर्थंश्रीपरमेश्वरप्रीत्यर्थंसप्रणवव्या
हृतिपूर्वकगायत्रीमंत्रेणचतुर्विंशतिलक्षसंख्यात्मकंगायत्रीमंत्रज-
पपुरश्चरणाख्यं कर्म करिष्ये ॥ तदंगत्वेनगणेशपूज-
नंस्वस्तिपुण्याहवाचनं मातृकापूजनंनांदीश्राद्धंचकरिष्ये ॥
सवितृदेवताप्रीयतामितिविशेषः ॥ आचार्यादिवरणपक्षेवर-
णानंतरंमधुपर्कादिभिः पूजयेन्नवा ॥ ततः स्वयंशुद्धदेशेकुशा-
द्यासनेउपविश्यपवित्रपाणिराचम्यप्राणानायम्यदेवताः प्रार्थ-
येत ॥ सूर्यःसोमोयमः कालः संधीभूतान्यहःक्षपाः॥ पवनो-
दिक्पतिर्भूमिराकाशंखेचरामराः ॥ ब्रह्मशासनमास्थायकुरु

ध्वमिहसन्निधिम् । ततोदेशकालौसंकीर्त्यश्रीपरमेश्वरप्रीत्यर्थं जपसंख्यापरिपूणार्थंविहितजपमहंकरिष्येतदंगभूत शुद्ध्यादि न्यासान्करिष्ये ॥ पृथिव्यामेरुपृष्ठऋषिः ॥ सुतलंछंदः ॥ आदिकूर्मोदेवता ॥ आसनसिद्ध्यर्थेजपेविनियोगः ॥ ओंपृथिवित्वयाधृतालोकादेवित्वंविष्णुनाधृता ॥ त्वंचधारयमांदेवि पवित्रंकुरुचासनम् ॥ कूर्मासनायनमः ॥ विमलासनायनमः॥ कमलासनायनमः ॥ आधारशक्त्यैनमः ॥ दुष्टद्रविणासनाय नमः ॥ नृसिंहायनमः॥ रुद्रायनमः ॥ अष्टदिक्षुअक्षतान्निक्षिप्य ॥ आसनमभिमंत्र्य ॥ अपक्रामंतु० ॥ भूतमुच्चाटयेद्गुरु ॥ असुरांतकायत्रिशूलायहुंफट् ओंह्रींअस्त्रायनमः ॥ इतिभूतमुत्सार्य ॥ पार्ष्ण्या घातत्रयंकृत्वा ॥ ओंह्रःअस्त्रायफट् ॥ इति मंत्रेणतालत्रयंकुर्यात् ॥ ब्रह्मरंध्रगतेचंद्रमंडलेमृतवर्षिणीम्॥भवानींभूमिशुद्ध्यर्थंभावयेदमृतेश्वरीम् ॥ ततस्तन्मौलिनिष्पंद सुधाकल्लोलवृष्टिभिः ॥ चिंतयेन्मनसात्मानंभूमिशुद्धिरियंभवेत् ॥ ततोदक्षिणनासापुटेनवायुमापूर्य लंवंरंयंहंइतिपंचभितिकबीजानिकुंभकेकृतेसकृदावर्त्यवामनासापुटेन वायुंरेचयेत् ॥ हृदिहस्तंनिधाय ओंहंसःसोहंहंसोहंसः॥ त्रिः पठेत् ॥ पंचदशसंस्कारसिद्ध्यर्थं पंचदशप्रणवावृत्तयःकार्याः ॥ अं

आंइंईउंऊंऋंॠंऌंॡं इत्यादिक्षकारांतंपठेत् । अंजल्यंतर्गता मातृकाविभाव्यमूर्धादिपादांताः त्रिर्न्यसेत् ॥ गायत्रीमंत्रेणकरशुद्धिंकृत्वा ॥ मणिबंधेप्रकोष्ठेचकूर्परेकरयोस्तथा ॥ तत्पृष्ठेचतदग्रेचरशुद्धिरुदाहृता ॥ ओंप्रणवस्यपरब्रह्मऋषिः देवीगायत्रीछंदः । परमात्मादेवता । व्याहृतीनांजमदग्निभरद्वाजभृगुगौतमकश्यपविश्वामित्रवसिष्ठाऋषयः ॥ गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यश्छंदांसि । अग्निवायुसूर्यबृहस्पतिवरुणेंद्रविश्वेदेवादेवताः न्यासेविनियोगः ॥ ओंभूः अंगुष्ठाभ्यांनमः ॥ ओंभुवःतर्जनीभ्यांनमः ॥ ओंसुवः मध्यमाभ्यांनमः ॥ ओंतत्सवितुर्वरेण्यंअनामिकाभ्यांनमः ॥ ओं भर्गोदेवस्यधीमहिकनिष्ठिकाभ्यांनमः ओंधियोयोनः प्रचोदयात्करतलकरपृष्ठाभ्यांनमः ॥ एवंहृदयादि ॥ अथऋषिन्यासः ॥ ओंविश्वामित्रर्षयेनमः॥ शिरसेनमः ॥ ओंगायत्री छंदसेनमः मुखायनमः ॥ ओंसवितृदेवतायैनमः हृदयाय नमः ॥ ओंतत्सवितुर्ब्रह्मात्मने अंगुष्ठाभ्यांनमः ॥ ओंवरेण्यंविष्णवात्मनेतर्जनीभ्यांनमः ॥ ओंभर्गोदेवस्यरुद्रात्मनेमध्यमाभ्यांनमः ॥ ओंधीमहीश्वरात्मनेअनामिकाभ्यांनमः ॥ ओंधियोयोनः सदाशिवात्मनेकनिष्ठिकाभ्यांनमः। ओंप्रचो-

दयात्सर्वात्मनेकरतलकरपृष्ठाभ्यांनमः ॥ एवंहृदयादि ॥ अथन्यासः ॥ ओंअंनमःनाभ्यैनमः ॥ ओंआंनमः हृदयायनमः ॥ ओंइंनमः कंठायनमः ॥ ओंईनमःमुखायनमः ॥ ओंउंनमः ललाटायनमः ॥ ओंऊंनमःब्रह्मरंध्रायनमः ॥ ओंएंनमःअंगुष्ठाभ्यांनमः ॥ ओंऐंनमः तर्जनीभ्यांनमः ॥ ओंओंनमःमध्यमाभ्यांनमः ॥ ओंऔंनमःअनामिकाभ्यांनमः ॥ ओंअंनमः कनिष्ठिकाभ्यांनमः । ओंअःनमःकरतलकरपृष्ठाभ्यांनमः ॥ ओंएंनमःहृदयायनमः ॥ ऐंनमःशिरसे० ॥ ओंओंनमःशिखायै० ॥ ओंऔंनमः कवचा० ॥ ओंअंनमःनेत्रत्रयाय० ॥ ओंअःनम अस्त्राय० ॥ ओंभूःपादाभ्यांनमः ॥ ओंभुवःजानुभ्यांनमः ॥ ओंसुवःकटिभ्यांनमः ॥ ओंमहःनाभ्यैनमः॥ ओंजनःकंठायनमः ॥ ओंतपः वक्त्रायनमः॥ ओंसत्यं ब्रह्मरंध्रायनमः ॥ ओंतत्सवितु० यात् ॥ कवचायहुं ॥ ओंआपः शिरसेनमः ॥ ओंज्योतिःनेत्राभ्यांनमः । ओंरसःजिह्वायैनमः ओंअमृतंललाटायनमः ॥ ओंब्रह्महृदयायनमः। पुनःओंभूर्भुवः सुवरोंशिखायैनमः। ओंभूः अंगुष्ठाभ्यांनमः ॥ ओंभुवःतर्जनीभ्यांनमः ॥ ओंसुवःमध्यमाभ्यांनमः ॥ ओंमहःअनामिकाभ्यांनमः ॥ ओंजनः कनिष्ठिकाभ्यांनमः ॥ ओंतपःसत्यं

करतल० एवं ॥ एवंहृदयादि ॥ ओंतत्सवितुःअंगुष्ठाभ्यां० ॥ ओंवरेण्यंतर्जनीभ्यां० ॥ ओंभर्गोदेवस्यमध्यमाभ्यां० ॥ ओं धीमहिअनामिकाभ्यां० ॥ ओंधियोनःकनिष्ठिकाभ्यां० ॥ ओंप्रचोदयात्करतलकरपृष्ठाभ्यां० ॥ एवंहृदयादि ॥ ओं आपः अंगुष्ठाभ्यांनमः ॥ ओंज्योतिः तर्जनीभ्यां० ॥ ओं रसः मध्यमाभ्यांनमः ॥ ओंअमृतंअनामिकाभ्यां० ॥ ओंब्रह्मकनिष्ठिकाभ्यां० ॥ ओंभूर्भुवःसुवरोंकरतलकरपृष्ठाभ्यां-नमः॥एवंहृदयादि ॥ ततःप्राणायामत्रयंकुर्यात् ॥ अथाक्षर-न्यासः ॥ ओंतत्नमः दक्षिणपादायनमः ॥ ओंसंनमःवाम पादाय० ॥ ओंविंनमःदक्षिणजानवे० ॥ ओंतुंनमःवामजान-वे० ॥ ओंवंनमःदक्षिणोरवे० ॥ ओंरेंनमःवामोरवे० ॥ओंणिं नमः गुह्याय० ॥ ओंयंनमःनाभ्यै० ॥ ओंभंनमःशिरसे०॥ ओंगोंनमःललाटाय० ॥ ओंदेंनमःदक्षिणनेत्राय० ॥ ओंवंन मःवामनेत्राय०। ओंस्यंनमःदक्षिणकर्णाय०॥ ओंधीनमःवा-मकर्णाय० ॥ ओंमंनमःदक्षिणनासापुटाय०॥ ओंहिंनमःवा-मनासापुटाय०॥ ओंधिंनमः वक्त्राय०॥ ओंयोंनमः चुबुका-य ॥ ओंयोंनमः कंठाय० ॥ ओंनःनमः दक्षिणबाहवे०॥ ओंप्रंनमःवामबाहवे० ॥ ओंचोंनमःहृदयाय०॥ ओंदंनमःदं-

तेभ्यो० ॥ ओंयांनमः दक्षिणस्तनाय० ॥ ओंतंनमःवामस्तनायनमः ॥ अथपदन्यासः ॥ ओंतत्पादाभ्यां० ॥ ओंसवितुःजानुभ्यां० ॥ ओंवरेण्यंकटयै० ॥ ओंभर्गःनाभ्यैनमः ॥ ओंदेवस्यहृदयाय० ॥ ओंधीमहिकंठायनमः ॥ ओंधियःनासाग्रायनमः ॥ ओंयः चक्षुर्भ्यां० ॥ ओंनःललाटायनमः ॥ ओंप्रचोदयात्मूर्ध्नेनमः ॥ ओंतत्सवितुर्ब्रह्मात्मनेहृ० ॥ओंवरेण्यं विष्णवात्मनेशिरसे० । ओंभर्गोदेवस्यरुद्रात्मनेशिखायै० ओंधीमहीश्वरात्मनेकवचाय० ॥ ओंधियोयोनःकालात्मने नेत्रत्रयाय० ॥ ओंप्रचोदयात्सर्वात्मनेअस्त्राय० ॥ इतिषडंगं कृत्वा ॥ अथपादन्यासः ॥ ओंतत्सवितुर्वरेण्यंनाभ्यैनमः ॥ ओंभर्गोदेवस्यधीमहिहृदयायनमः । ओंधियोयोनःप्रचोदयात्कंठायनमःअथध्यानम् । वौधायनमः।मंदाराह्वयरोचनांजनजपार्काभैर्मुखैरिंदुमद्रत्नोद्यन्मुकुटांशुसंततचतुर्विंशार्णचित्रातनूः ॥ अंभोजारिदराह्वयौगुणकपालाख्यौचपाशांकुशेष्टाभीतिर्दधतीभवेद्भवभयप्रोत्सारिणीतारिणी । मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्र्यक्षरैर्युक्तामिंदुनिबद्धरत्नमुकुटांतत्त्वार्थ वर्णात्मिकाम् । गायत्रींवरदाभयांकुशकषाशुभ्रांकपालंगुणं शंखंचक्रमथारविंदयुगलंहस्तैर्वहंतींभजे १ ॥ आयातुवरदादे

वीअक्षरंब्रह्मसंमितम् । गायत्रींछंदसांमातेदंब्रह्मजुषस्वमे । हंसा
रूढांसिताब्जैस्तरुणमणिलसद्भूषणांभालनेत्रां वेदास्यामक्ष
मालांसितमथकमलंदंडमभ्यादधानाम् । ध्यायेद्दोर्भिश्चतुर्भि
स्त्रिभुवनजननींपूर्वसंध्याभिवंद्यांगायत्रीमृक्सवित्रीमभिनववय-
सीं मंडले चंडरश्मेः २ ॥ ताक्ष्यारूढांबुजाक्षींशतमखमणि
भांचक्रशंखौदधानां दोर्भिः पद्मंचतुर्भिःस्फुटसुषमगदांविश्व
कर्त्रींज्वलंतीम् । आलोलांपूर्णहारांशशिरुचिरजटांवैष्णवींम-
ध्यमेह्निसावित्रींभावयामित्रिभुवनजननींमंडलेचंडरश्मेः ३
पंचास्यांपीतविद्युद्द्युतिरुचिरजटामंडलांचंद्रमौलिंभास्वद्भूषाभु
जंगांफणिमणिविलसद्भासिभस्मांगरागाम् ॥ ध्यायेत्खट्वां
गशूलामभयवरकरांव्याघ्रचर्मांबराढ्यां सायाह्नेसामवेदां
त्रिनयनवृषभारूढवाणींक्षसूत्राम् ॥ ४ ॥ इतिध्यानं
समर्पयामि ॥ आगच्छवरदेदेविजपेमेसन्निधोभव ॥ गायं
तंत्रायसेयस्माद्गायत्रीत्वंततःस्मृता ॥ ओंओजोसिसहोसि०
श्रियमावाहयामि ॥ मुद्राः ॥ सुमुखंसंपुटंचैवविततंविस्तृतंत-
था ॥ द्विमुखंत्रिमुखंचैवचतुष्पंचमुखंतथा ॥ षण्मुखाधोमुखं
चैवव्यापकांजलिकंतथा ॥ शकटंयमपाशंचग्रथितंचोन्मु
खोन्मुखम् ॥ प्रलंबंमुष्टिकंचैवमत्स्यःकूर्मोवराहकः सिंहाक्रां

तंमहाक्रांतंमुद्गरंपल्लवंतथा ॥ चतुर्विंशतिसङ्ख्यामुद्राएताःप्रतिष्ठिताः ॥ इतिमुद्रानजानातिगायत्रीनिष्फलाभवेत् ॥ इतिमुद्राः प्रदर्श्य शापविमोचनंकुर्यात् ॥ अथगायत्रीशापविमोचनम् ॥ अस्यश्रीब्रह्माशापविमोचनमंत्रस्यब्रह्माऋषिः ॥ भुक्तिमुक्तिप्रदाब्रह्मशापविमोचनीगायत्रीशक्तिर्देवता ॥ गायत्रीछंदः ॥ ब्रह्मशापविमोचनार्थेजपेविनियोगः। गायत्रीब्रह्मेत्युपासीतंयद्रूपंब्रह्मविदोविदुः ॥ तांपश्यंतिधीराः सुमनसावाचमग्रत ॥ वेदात्मनायविद्महेहिरण्यगर्भायधीमहि ॥ तन्नोब्रह्माप्रचोदयात् ॥ ओंदेवि भगवतिगायत्रीत्वंब्रह्मशापाद्विमुक्ताभव ॥ ओंअस्यश्रीवसिष्ठशापविमोचनमंत्रस्य ॥ निग्रहानुग्रहकर्तावसिष्ठऋषिः ॥ त्रिष्टुप्छन्दः ॥ वसिष्ठानुग्रहीतागायत्रीशक्तिर्देवता ॥ वसिष्ठशापविमोचनार्थेजपेविनियोगः॥ सोहमर्कपरंज्योतिरर्कज्योतिरहंशिवः ॥ आत्मज्योतिरहंशुक्रः सर्वज्योतीरसोहमोम् ॥ इत्युक्त्वायोनिमुद्रांसंदर्शयेत् ॥ ओंदेविभगवतिगायत्रित्वंवसिष्ठशापाद्विमुक्ताभव ॥ ओंअस्यश्रीविश्वामित्रशापविमोचनमंत्रस्यनूतनसृष्टिकर्ताविश्वामित्रऋषिः ॥ वाग्दोहागायत्रीछन्दः ॥ विश्वामित्रानुगृहीतागायत्रीशक्तिर्देवता । विश्वामित्रशापविमोचनार्थेजपेविनियो

गः ॥ गायत्रींभजाम्यग्निमुखांविश्वगर्भांयदुद्भवाम् ॥ देवाश्च
क्रोविकृर्ष्टितांकल्याणीमिष्टकरींप्रपद्ये ॥ यन्मुखान्निःसृतो
खिलवेदगर्भः ॥ गायत्रीत्रयंपठित्वा ॥ देविभगवतिगायत्रित्वं
विश्वामित्रशापाद्विमुक्ताभव ॥ ओंअस्यश्रीवरुणशापविमो-
चनमंत्रस्यपायुर्भारद्वाजऋषिः ॥ त्रिष्टुप्छंदः ॥ वरुणानु-
गृहीतागायत्रीशक्तिर्देवता ॥ वरुणशापविमोचनार्थेजपेवि-
नियोगः ॥ तिग्मायुधौतिग्महेतीसुशेवौसोमारुद्राविहसुमृ
ळतंनः ॥ प्रनोमुंचतंवरुणस्यपाशाद्गोपायतंनःसुमनस्यमा
ना ॥ ओंधाम्नोधाम्नोराजन्नितोवरुणनोमुंच ॥ आनंदेविभ
गवतिगायत्रित्वंवरुणशापाद्विमुक्ताभव ॥ शापयुक्तातुयासं-
ध्यानफलातुकदाचन ॥ शापादुत्तारितासंध्याभुक्तिमुक्ति
फलप्रदा ॥ मानसपंचोपचारपूजांकुर्यात् ॥ मूलमंत्रेण ॥
लंपृथिव्यात्मनेनारायणायनमः ॥ गंधम् ॥ हंआकाशात्मने
वासुदेवायनमः ॥ पुष्पम् ॥ यं वाय्वात्मनेसंकर्षणायनमः ॥
धूपम् ॥ रं अग्न्यात्मनेप्रद्युम्नायनमः ॥ दीपम् ॥ अमृतात्मने
अनिरुद्धायनमः ॥ नैवेद्यम् ॥ ओंयंरंलंवंहंपंचतत्त्वात्मनेन
मः ॥ मंत्रपुष्पम्॥मालाप्रार्थना ॥ ओंमहामालेमहामायेसर्वश-
क्तिस्वरूपिणि । चतुर्वर्गस्त्वयिन्यस्तस्तस्मान्मेसिद्धिदा-

भव ॥ ओंअविघ्नंकुरुमालेत्वम् ॥ इतिमालामादायहृदयस
मीपेधारयन् ॥ सवितारंध्यायन्एकाग्रचित्तेनमध्यांगुष्ठम
ध्यपर्वणिनिधाय ॥ उन्नतगात्रः प्रणवव्याहृतिपूर्वकं गाय
त्रीमंत्रमुच्चारयन्मध्यदिनावधिजपेत्सार्धप्रहरांतमत्वरया ॥
विश्वामित्रऋषिः ॥ गायत्रीछन्दः ॥ सवितादेवता ॥ जपेविनि
योगः अंतेपुनः प्रणवमुच्चार्य ॥ अष्टाक्षरींपंचाक्षरींचद्विगुणां
त्रिगुणांजपसिद्धयर्थंजपेदित्युक्तमाचार्यैः सूत्रेनतुहवनमिति
विसर्जनम् ॥ त्वंमालेसर्वदेवानांप्रीतिदाशुभदाभव । श्रियंकुरु
ष्वमेभद्रेयशोवीर्यंचसर्वदा ॥ इतिमालांशिरसिधारयन् त्रिः
प्रणानायम्य पुनः षडंगंकृत्वामुद्रांप्रदर्शयेत् ॥ सुरभिज्ञा-
नशंखंचयोनिः कूर्मोथपंकजम् । लिंगंनिर्वाणमुद्रांचजपांतेष्टौ
प्रदर्शयेत् ॥ उत्तमेशिखरेजातेभूम्यांपर्वतमूर्धनि ॥ ब्राह्मणे
भ्योभ्यनुज्ञातागच्छदेवियथासुखम् ॥इतिविसृज्यजपमीश्वरा-
र्पणंकुर्यात् ॥ यज्जाग्रतइतिषण्मंत्रान् त्रिः पठित्वामत्यहंशयी-
तइति ॥ अथमालासंस्कारः कुशोदकसहितैः पंचगव्यैः मा
लांप्रक्षाल्यओंह्रींअंआंइंईंउंऊंऋंॠंऌंॡंएंऐंओंऔंअंअः कं
खंगंघंङं चंछंजंझंञंटंठंडंढंणंतंथंदंधंनंपंफंबंभंमं यंरंलंवंशंषं
संहंळंक्षं इत्येतानिमातृकाक्षराणिअश्वत्थपर्णस्थापितमाला

यां त्रिन्यस्य सद्योजातमितिमंत्रान्जपित्वा ॥ एतेषां मध्येप्रथमेनसद्योजातमितिमंत्रेण शीतलजलेनप्रक्षाल्यद्वितीयमंत्रेण वामदेवेति चंदनकस्तूर्यादिना लेपयित्वापंचम मंत्रेणप्रतिमणिशतसंख्यया भिमंत्रयेत् ॥ अघोरेभ्यइतिमंत्रेणमेरुंशतवारंमंत्रयेत् इतिमालासंस्कारः ॥ एवंजपंकृत्वाजपसमाप्तौगृह्योक्तविधिनाअग्निंप्रतिष्ठाप्य ग्रहावाहनादिकलश प्रार्थनांतंकृत्वाचक्षुषीं आज्येनेत्यंतेआदित्यादिनवग्रहान् अर्कसमिधादिभिश्चवाज्यद्रव्यैः अष्टोत्तरशतसंख्ययायक्ष्ये ॥ लोकपालान् तत्तद्देवतानामन्वाधानंकृत्वा सवितारं चतुर्विंशतिसहस्रं तिलाहुतिभिस्त्रिसहस्रंपायसाहुतिभिस्तावतीभिर्घृताहुतिभिस्तावतीर्दूर्वाहुतिभिस्तावतीभिः क्षीरद्रुम समिधाहुतिभिश्चशेषेण स्विष्टकृतमित्यादिचरुपायसतिलैः सहाज्यस्यपर्यग्निंकृत्वा ॥ होमकालेसवित्रादिभ्यइदंनममेति त्यागः ॥ दूर्वात्रयेणैकाहुतिर्दूर्वात्रयेदधिमध्वंजनकार्यम् ॥ कालेबलिदानादिदत्त्वासमुद्रज्येष्ठेत्यादिइमं मेइत्यभिषेकांतेप्रत्ययुतंधेनुंदत्त्वाततोविसर्जनादिब्राह्मणभोजनंसंकल्पयंति । वाचनत्रयंचदद्याद्गायत्रीसावित्रीसरस्वतीप्रीत्यर्थम् ॥ ततः कलशदानानिईश्वरार्पणंकुर्यात् ॥ होमसमाप्तौजलेदेवंसंपूज्य

होमदशांशेन गायत्र्यंतेसवितारंतर्पयामीतितर्पणंकार्यम् ॥ तर्प-
णदशांशेनगायत्र्यंतेआत्मानमभिषिंचामि तत्रइतिकुंभमुद्र
यास्वमूर्धनिअभिषेकः कार्यः ॥ होमतर्पणानांमध्येयदेवंन
संभवतितत्स्थानेद्विगुणोजपः कार्यः ॥ ततोऽभिषेकदशांशे
नब्राह्मणान्भोजयेत् ॥ ततोब्राह्मणान्दक्षिणादिभिः परितो-
ष्य ॥ तत आशिषोगृहीत्वाचतुर्विंशतिलक्षात्मकं गाय-
त्रीपुरश्चरणं संपूर्णमस्त्विति भवंतोब्रुवंतु ॥ चतुर्विंशतिलक्षगाय-
त्रीपुरश्चरणं संपूर्णमस्तु ॥ ततः कर्ताप्रारंभमारभ्यसमाप्तिप-
र्यतंहविष्याशीसत्यवागधःशायीभवेत् ॥ पारिजातादाहृते ॥
दशदानंचगोदानंकन्यादानंतथैवच ॥ भूदानंगृहदानंचम-
हादानानिषोडश ॥ ऋग्विधाने ॥ वेदादीनांचगीतायाः
प्रसादजननेविधिम् । गायत्र्यासंप्रवक्ष्यामिधर्मकामार्थमोक्षदम्
मध्यात्रेमितभुङ्मौनीत्रिः स्नानार्चनतत्परः । जपेल्लक्षजपंधी-
मानूनान्यदङ्मानसक्रियइति ॥ लक्षपुरश्चरणमुच्यते ॥
कलौचतुर्गुणोजपोविहितः ॥ अतोद्वादशलक्षैः पुरश्चरणं
भवति ॥ तत्रसंकल्पस्तथैवोह्यः द्वादशलक्षात्मकंपुरश्चरणंक-
रिष्येइति ॥ सवितारंद्वादशसहस्रतिलाहुतिभिः इति गाय-
त्रीपुरश्चरणविधिः समाप्तः ॥ ❀ ॥ यत्किंचित्पुराणमध्ये

देशकालनियमाः ॥ पर्वताग्रेनदीतीरेबिल्वमूलेजलाशये ॥
गोष्ठेदेवालयेऽश्वत्थेउद्यानेतुलसीवने ॥ १ ॥ पुण्यक्षेत्रेगुरोः
पार्श्वेचित्तैकांतस्थलेपिवा ॥ पुरश्चरणकंमंत्रीसिद्ध्यत्येवन
संशयः ॥ २ ॥ क्षीराहारः फलाशी वा शकाशीवाहविष्यभु-
क् ॥ भिक्षाशीवाजपेन्मंत्रंकृच्छ्रचांद्रायणादिकृत् ॥ ३ ॥
श्रुतिस्मृतिविरोधंचजपंरात्रौविवर्जयेत् ॥ भूशय्यांब्रह्मचा-
रित्वंमौनंचर्यानसूयता ॥ ४ ॥ लवणक्षारमाम्लंचव्यं-
जनंकांस्यभोजनम् ॥ तांबूलंचद्विभुक्तंचदुःसंवादंप्रमत्तताम्
॥ ५ ॥ नित्येनिषेवणंस्नानंक्षुद्रकर्मविवर्जितम् ॥ नित्यदानं
नित्यपूजादेवतास्तुतिकीर्तनम् ॥ नैमित्तकार्चनंचैवविश्वा-
सोगुरुदेवयोः ॥ ६ ॥ जपनिष्ठाद्वादशैतेधर्माःस्युर्मंत्रसि-
द्धिदाः ॥ नित्यंसूर्यमुपस्थायतस्यचाभिमुखेयजेत् ॥ ७ ॥
देवतांप्रतिमादौवावह्नौवाभ्यर्च्यतन्मनः ॥ अनिर्वेदनया-
व्यग्रः शास्त्रोक्ताचारपालकः ॥ ८ ॥ स्नानपूजाजपध्यान
होमतर्पणतत्परः ॥ निष्कामोदेवतानांचसर्वकर्मनिवेदकः ॥
॥ ९ ॥ एवमादींश्चनियमान्पुरश्चरणकेचरेत् ॥ अथध्या-
नम् ॥ ब्रह्माणीचतुराननाक्षवलयाकुंभंकरेस्रुक्स्रुवौ बिभ्राणा
तरुणेंदुकांतिवदनाऋग्रूपिणीबालिका ॥ हंसारोहणकेलिरं-

बरमणेर्बिंबार्चिताभूतिदागायत्रीहृदिभाविताभवतुनः संदत्स
मृद्ध्यैसदा ॥ १ ॥ रुद्राणीनवयौवनात्रिनयनावैयाघ्रचर्मां-
बराखट्वांगत्रिशिखाक्षसूत्रवलयाभीतिश्रियैचास्तुनः ॥ बिभ्र
द्वामजटाकलापविलसद्बालेंदुमौलिर्मुदासावित्री तनयारमा
सिततनुर्ध्येयायजूरूपिणी ॥ २ ॥ ध्येयासाचसरस्वतीभगव
तीपीतांबरालंकृताश्यामासामवतनुर्जपाकुसुमयुग्दामार्चिता वै-
ष्णवी ॥ तार्क्ष्यस्थाफणिनूपुरांगदलसद्ग्रैवेयभूषोज्ज्वलाह
स्तालंबितशंखचक्रसुगदाभीतिश्रियैचास्तुनः ॥३॥ इति ॥

गायत्रीपुरश्चरणविधिः समाप्तः ।

---

मुद्रक एवं प्रकाशक:

**खेमराज श्रीकृष्णदास,**

अध्यक्ष : श्रीवेंकटेश्वर प्रेस,

खेमराज श्रीकृष्णदास मार्ग, मुंबई - ४०० ००४.


## पुस्तकें मिलने के स्थान

१) खेमराज श्रीकृष्णदास,
श्रीवेंकटेश्वर स्टीम प्रेस,
खेमराज श्रीकृष्णदास मार्ग,
खेतवाडी, मुंबई - ४०० ००४.

२) खेमराज श्रीकृष्णदास,
६६, हडपसर इण्डस्ट्रिअल इस्टेट
पुणे - ४११ ०१३.

३) गंगाविष्णु श्रीकृष्णदास
लक्ष्मीवेंकटेश्वर स्टीम प्रेस,
व बुक डिपो,
अहिल्याबाई चौक, कल्याण
(जि. ठाणे - महाराष्ट्र)

४) खेमराज श्रीकृष्णदास,
चौक - वाराणसी (उ.प्र.)

KHEMRAJ SHRIKRISHNADASS

